

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतसेतुः

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः

रामटेकम् (नागपुरम्), महाराष्ट्रम्

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतसेतुः

प्रेरणा तथा मार्गदर्शनम्
डॉ. उमा वैद्य (मा. कुलगुरुः)

सम्पादकमण्डलम्

डॉ. मधुसूदनः पेन्ना
डॉ. ललिता चंद्रात्रे
डॉ. रेणुका बोकारे
डॉ. सी.जी. विजयकुमारः
डॉ. हृषीकेशः दलाई
श्री. सुमितः कठाळे

कागदम् - ७० जीएस्एम्, मॅपलिथो
प्रकाशनवर्षम् - २०१४ 

ISBN No. : 978-81-921617-2-3

प्रकाशकः

कुलसचिवः
कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः, रामटेकम्

# संदेशः

संस्कृतभाषां साहित्यं च ये जनाः मनसा इच्छन्ति, संस्कृतभाषायां वर्तमानानि सुभाषितानि उपदेशप्रदकथाः च आस्वादितुम् ये इच्छन्ति तेषां कृते सेतुरिव भवति अयं संस्कृतसेतुः। एतस्य पुस्तकस्य प्रकाशनद्वारा जनाः संस्कृतं प्रति वर्तमानं गौरवं वर्धयन्तु इति कामयामहे। तथैव प्राथमिकस्तरे संस्कृतजिज्ञासुजनानां कृते प्रकाशितानां पुस्तकानां मध्ये संस्कृतवाग्विलासस्य प्रथमद्वितीयमुद्रे अपि अतीव उपयुक्ते भवतः। संस्कृतविश्वविद्यालयस्य एतत्प्रकाशनद्वारा संस्कृतप्रेमिणः छात्राः च संस्कृतस्य माधुर्यस्य परिचयम् आप्नुवन्तु संस्कृताध्ययने च प्रवर्तन्ताम् इति भावयन्ती सर्वशुभकामनाः वितरामि।

डॉ. उमा वैद्य
कुलगुरुः

# प्रतिज्ञा

भारतः मम देशः। सर्वे भारतीयाः मम बान्धवाः। भारतदेशे अहं सर्वदा स्निह्यामि। अस्य देशस्य याः समृद्धाः विविधाश्च परम्पराः ताः प्रति मम शिरः अभिमानेन उन्नतं भवति। तासां परम्पराणाम् अनुगमनं कर्तुम् आसादयितुं च अहं सदा प्रयतिष्ये।

अहं पितरौ गुरून् वयोज्येष्ठान् प्रति च आदरेण वर्तेय। सर्वान् प्रति सौजन्येन व्यवहरेयम्। अहं मम राष्ट्रेण देशबान्धवैश्च सह एकान्तनिष्ठम् आचरणं करोमि इति प्रतिजाने। तेषां कल्याणे समुत्कर्षे च मम आत्यन्तिकं सौख्यं विनिहितम् अस्ति।

जयतु संस्कृतम्। जयतु भारतम्।



# विश्वविद्यालयगीतम्

- रचयिता -
महाकविः डॉ.श्री.ग.बा. पळसुले

शतशतकोटिशिरत्पर्यन्तम्
प्रवाहतात् संस्कृतमन्दाकिनी ॥धृ॥

सिन्धु-शुतुद्री-सरस्वतीनाम् तटे ऋषीणां ध्यानपराणाम्
होमधूमपावितलोकानाम् अत्रिभृगूणां छन्दोवाणी ॥१॥
प्रवहतात् .....

वाल्मीकिमुनि-व्यासविरचिता रामकृष्णयोः पावन-गाथा
अखण्डदीपो भगवद्गीता कर्मयोगसंदेशवाहिनी ॥२॥
प्रवहतात् .....

राष्ट्रैक्यस्य च महती स्फूर्तिः विना संस्कृतं नैव संस्कृतिः
पुष्टिं तुष्टिं समावहन्ति इह परत्र कल्याणकारिणी ॥३॥
प्रवहतात् .....

# अनुक्रमणिका

# सुभाषितमाला



सुभाषित या शद्वामध्ये सु आणि भाषित असे दोन शद्व आहेत। 'सु' म्हणजे चांगले, सुंदर; भाषित म्हणजे बोललेले किंवा सांगितलेले वचन होय. सुभाषित हे वाणीचे भूषण आहे. सुभाषितांमुळे आपली वाणी अलंकृत होते, तिचे सौंदर्य वृद्धिंगत होत असते. सुभाषिते ही संस्कृत भाषेचे अलंकार आहेत. विद्या, धन, परोपकार, सत्संगती इ. विविध विषयांवर संस्कृत साहित्यात सुभाषिते उपलब्ध आहेत.

१. या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ।।

अन्वयः – या कुन्देन्दुतुषारहारधवला, या शुभ्रवस्त्र-आवृता या वीणावरदण्डमण्डितकरा, या श्वेतपद्मासना। या ब्रह्म-अच्युत-शंकरप्रभृतिभिः देवैः सदा वन्दिता, सा निःशेषजाड्यापहा भगवती सरस्वती माम् पातु।

**भाषान्तर–** जी कुन्दा (च्या फुलांप्रमाणे), चंद्र आणि हिमकणांप्रमाणे शुभ्रकांतीची आहे, (धवल कांती असणारी), जी शुभ्र वस्त्र परिधान करते, जिने हातात वीणावाद्याचा दण्ड धरलेला आहे, जी शुभ्र कमळावर स्थानापन्न आहे, जिला (साक्षात्) ब्रह्मा, विष्णु आणि शंकर सर्देव वंदन करतात (अशी) बुद्धिची मंदता संपूर्णपणे दूर (नष्ट) करणारी भगवती सरस्वती माझे रक्षण करो.

२. **अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति।**
**व्ययतो वृद्धिमायाति, क्षयमायाति सञ्चयात्।।**

**अन्वयः –** भारति! तव अपूर्वः कोऽपि कोशः विद्यते।
व्ययतो वृद्धिमायाति सञ्चयात् क्षयमायाति।

**भाषान्तर–** हे शारदे, तुझा ज्ञानदानाचा खजिना विलक्षण आहे. तो खर्च केल्याने अधिकाधिक वृद्धिंगत होतो आणि त्याचा संग्रह केला असता तो क्षय पावतो. भौतिक धनाच्या कोषापेक्षा असा भिन्न असल्यामुळेच सरस्वतीचा कोष अनमोल आहे, श्रेष्ठ आहे.

३. **सुखार्थिनः कुतो विद्या, कुतः विद्यार्थिनः सुखम्।**
**सुखार्थी वा त्यजेद् विद्यां विद्यार्थी वा त्यजेत्सुखम्।।**

**अन्वयः –** सुखार्थिनः कुतः विद्या, विद्यार्थिनः कुतः सुखम्।
सुखार्थी वा विद्यां त्यजेत्, विद्यार्थी वा सुखम् त्यजेत्।

**भाषान्तर** – सुखांच्या मागे धावणाऱ्या व्यक्तीला विद्या प्राप्त होत नाही, या विद्येसाठी सुखांचा त्याग केला पाहिजे. सुखाची आशा असलेल्या मनुष्याने विद्येचा त्याग केला पाहिजे आणि विद्येची आस असलेल्या व्यक्तीने सुखांचा त्याग केला पाहिजे. कारण सुखार्थी मनुष्याला विद्या प्राप्त होत नाही आणि विद्यार्थी मनुष्याला सुख प्राप्त होत नाही.

४. **न चोरहार्यं न च राजहार्यं, न भ्रातृभाज्यं न च भारकारि।**
**व्यये कृते वर्धत एव नित्यं, विद्याधनं सर्वधनप्रधानम्।।**

**अन्वयः** – न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्।

**भाषान्तर** – विद्या सर्व धनांपेक्षा श्रेष्ठ धन आहे. चोरच काय राजादेखील हे विद्याधन मागून घेऊ शकत नाही. तसेच ते कधी भारभूतदेखील होऊ शकत नाही. माणसाजवळील धन व्यय केल्याने क्षय पावते आणि संग्रहाने वृद्धिगंत होते. हा सर्वसामान्य अनुभव आहे पण विद्यारुपी धन व्यय केल्याने नष्ट न होता वृद्धिंगत होते तर संग्रहीत केल्याने वृद्धिंगत न होता नाश पावते.

५. **येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मृत्युलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति ।।**

**अन्वयः** – येषां विद्या, तपो, दानं, ज्ञानं, शीलं, गुणः, धर्मः (च) न, ते भुवि भारभूताः मृगाः मृत्युलोके मनुष्यरूपेण चरन्ति।

**भाषान्तर–** खरोखरीच विद्याविहीन मनुष्याचे जीवन पशुप्रमाणे आहे. विद्येशिवाय जीवनाला अर्थ उरत नाही, उद्दिष्ट उरत नाही, पूर्णता येत नाही. विद्याहीन मनुष्य जीवनामध्ये यशस्वी होत नाही, ज्या लोकांजवळ विद्या, तप, दान, शील, गुण, धर्म इत्यादी गोष्टी नसतात ते लोक पृथ्वीवर केवळ भारभूत असतात. असे लोक म्हणजे मनुष्यांच्या रूपाने वावरणारे पशुच असतात।

### * कठिण शब्द *

| | | |
|---|---|---|
| कोशः | – | खजिना |
| भारति | – | शारदा |
| व्ययतः | – | खर्च केल्याने |
| सुखार्थिनः | – | सुखांच्या मागे धावणाऱ्या व्यक्ति। |
| सर्वधनप्रधानम् | – | सर्व धनापेक्षा श्रेष्ठ धन आहे। |
| भारभूता | – | भारभूत असतात। |
| आवृता | – | परिधान केलेली |
| निःशेष | – | संपूर्णपणे |
| जाड्या | – | मंदता |
| अपहा | – | दूर करणारी |

**प्रश्ना:**

१. 'विद्या धनं सर्वधनप्रधानम्' इति सविस्तरं लिखत।
२. विद्यार्थिलक्षणं स्पष्टीकुरुत।



# वृक्षाः सत्पुरुषा इव

(आचार्यः कक्षायां प्रविशति।)

छात्राः – (उत्थाय)। आचार्य नमो नमः।

आचार्यः – सुप्रभातम्। उपविशन्तु सर्वे। (सर्वे उपविशन्ति) अद्य अस्माकं विद्यालये वृक्षारोपणोत्सवः अस्ति। सर्वे सिद्धाः सन्ति खलु?

राजीवः – आचार्य। अहम् एकं श्लोकं पठामि किम्?

आचार्यः – पठ। सर्वे शृण्वन्तु।

राजीवः – "छायामन्यस्य कुर्वन्ति, तिष्ठन्ति स्वयमातपे।
फलान्यपि परार्थाय, वृक्षाः सत्पुरुषा इव।।"

आचार्यः – साधु। सौरभ! त्वम् अस्य श्लोकस्य अर्थं कथय।

सौरभः – वृक्षाः स्वयम् आतपे स्थित्वा अन्येभ्यः छायां कुर्वन्ति। तेषां फलानि अपि अन्ये एव भक्षयन्ति। अतः परोपकारिणः वृक्षाः सत्पुरुषाः इव भवन्ति।

आचार्यः – साधु। छात्राः! वृक्षाः सर्वदा परोपकारम् एव कुर्वन्ति।

प्रणवः – केशव! त्वम् अद्य कं वृक्षम् आरोपयितुम् आनीतवान्?

केशवः – मया तु आम्रवृक्षस्य पादपः आनीतः।

सौरभः – अहं जपाकुसुमस्य पादपम् आनीतवान्।

आचार्यः – छात्राः। यूयं धन्याः ननु यत् वृक्षान् प्रति एवं समादरभावं धारयथ।

प्रणवः – आचार्य! एषा भवतामेव प्रेरणा।

श्रीहरिः – अहं तु मम गृहे अपि वृक्षारोपणं कृतवान्।
मया पाटलपादपः आरोपितः।

आचार्यः – उत्तमम् आचरणम् एतत्। स्व-पादपान् स्वीकृत्य चलन्तु,

वृक्षारोपणस्य समयः सञ्जातः।

# अज्ञातकुलशीलस्य वासो न देयः

*महामहोपाध्याय नारायण पंडित यांनी नीती आणि व्यवहार यांचे ज्ञान देण्यासाठी हितोपदेशाची रचना केली. हितोपदेश म्हणजे हितकर उपदेश देणारा ग्रंथ. हितोपदेश ग्रंथात मित्रलाभ, सूहृद्भेद, विग्रह आणि सन्धि अशी चार प्रकरणे आहेत. हितोपदेशातील कथा वाचकाला व्यावहारीकज्ञान, लोकव्यवहार, नीतिज्ञान, राजनीति इ. विषयांचे ज्ञान सरळ आणि सुबोध भाषेतून देण्यात आले आहे.*

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः। तस्य कोटरे दैवदुर्विपाकात् गलितनखनयनो जरद्गवनामा गृध्रः प्रतिवसति। अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाऽऽहारात् किञ्चित् किञ्चिदुद्धृत्य तस्मै ददति, तेनाऽसौ जीवति, तेषां शावकरक्षां च करोति। अथ कदाचित् दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षयितुं तत्राऽऽगतः। ततः तं दृष्ट्वा पक्षिशावकैः भयार्तैः कोलाहलः कृतः। तत् श्रुत्वा जरद्गवेन उक्तम् - कोऽयमायाति? दीर्घकर्णो गृध्रमवलोक्य सभयमाह-हा हतोऽस्मि यतोऽयं मां व्यापादयिष्यति।

अधुनाऽतिसन्निधाने पलायितुमक्षमः। तद्यथा भवितव्यं तथा भवतु, तावद् विश्वासमुत्पाद्यस्य समीपम् उपगच्छामि इत्यालोच्य तम् अब्रवीत् ''आर्य त्वाम् अभिवन्दे''। गृध्रोऽवदत् 'कस्त्वम्'? सोऽवदत् 'मार्जारोऽहम्'! गृध्रो ब्रूते -दूरम् अपसर नो चेद् हन्तव्याऽसि मया। मार्जारोऽवदत् ''श्रूयतां मद्वचनम् ततो यद्यहं वध्यस्तदा हन्तव्यः।'' गृध्रो ब्रूते -ब्रूहि किमर्थमागतोऽसि? सोऽवदत् ''अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचारी चान्द्रायणव्रतमाचरन् तिष्ठामि। युष्मान् 'धर्मज्ञानरताः प्रेमविश्वासभूमयः' इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति। अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः।

गृध्रोऽवदत् 'मार्जारो हि मांसरुचिः' पक्षिशावकाश्च अत्र निवसन्ति, तेनाऽहमेवं ब्रवीमि। तत् शृत्वा मार्जारो भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च मया धर्मशास्त्रं शृत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणम् अध्यवसितम्, यतः परस्परं विवदमानानामपि धर्मशास्त्राणाम् "अहिंसा परमो धर्मः" इत्यत्रैकमत्यम्।

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः ततो दिनेषु गच्छत्सु असौ पक्षिशावकानाक्रम्य स्वकोटरमानीय प्रत्यहं खादति। अथ येषामपत्यानि खादितानि, तैः शोकार्तैः विलपद्भिरितस्ततो जिज्ञासा समारब्धा। तत्परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः। पश्चात् पक्षिभिः इतस्ततो निरूपयद्भि स्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरम् अनेन एवं शावकाः खादिता इति सर्वैः पक्षिभिः निश्चित्य स गृध्रो व्यापादितः। अतोऽहं ब्रवीमि अज्ञातकुलशीलस्य वासो न देय इति।

**अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।**
**मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः।।**

### * कठिण शब्द *

| | | | | | |
|---|---|---|---|---|---|
| दैवदुर्विपाकात् | - | दुर्दैवाने | व्यापादयिष्यति | - | मारील |
| अतिसन्निधाने | - | अतिशय जवळ | प्रस्तुवन्ति | - | बोलतात |
| प्रत्यहं | - | दररोज | शोकार्तैः | - | शोकाने आर्त |

**प्रश्न :**

१. अज्ञातकुलशीलस्य वासो न देयः इत्यस्याः कथायाः सारांशं स्वशब्दैः लिखत।

२. अज्ञातकुलशीलस्य वासो न देयः इत्यस्याः कथायाः आशयं लिखत।







# विन्ध्यवर्णना

अस्माकं भारतदेशे विन्ध्यः नाम गिरिः वर्तते। अयम् अतीव विशालः! भारतस्य मध्यक्षेत्रे गुजरातप्रान्ताद् आरभ्य उत्कलप्रान्तं यावद् अयं विस्तृतः वर्तते। अस्य औन्नत्यं ७०० मीटर यावद् अस्ति। अम्बा-पानी, होरोया - दशारती, मृगनाथः इत्यादीनि अस्य प्रमुखाणि शिखराणि वर्तन्ते। एतेन सदृशः सुन्दरः गिरिः देशे अन्यः न विद्यते। विन्ध्यः भारतस्य अलङ्कारः वर्तते। विन्ध्यगिरेः शिखराणि सर्वदा हरितानि भवन्ति तानि रवेः प्रकाशे अतीव शोभन्ते।

विन्ध्यगिरौ नाना वृक्षाः वनस्पतयः च रोहन्ति। बहुविधानि पुष्पाणि वृक्षेषु फुल्लन्ति। नाना निर्झराः सरितः च वहन्ति। अतः गिरेः प्रदेशः अतीव रम्यः प्रशान्तः च प्रतिभाति। अयं प्रदेशः पर्यटकेभ्यः अतीव रोचते। अतः विभिन्नेभ्यः स्थानेभ्यः आगताः पर्यटकाः अत्र भ्राम्यन्ति प्रसन्ने वातावरणे सुखं च अनुभवन्ति।

नर्मदा, गोदावरी, महानदी, कृष्णसिन्धुः, पार्वती, शिप्रा, विन्ध्यवासिनी इत्यादयः प्रमुखाः सरितः विन्ध्यगिरेः उद्भवन्ति। उज्जयिनी, ओंकारेश्वरः, अमरकण्टकम् इत्यादीनि प्रसिद्धानि तीर्थस्थलानि अत्र विद्यन्ते। स्कन्दपुराणे अस्य गिरेः विशेषः उल्लेखः उपलभ्यते। विन्ध्यगिरिः अस्माकं भारतस्य भूषणम्।

*** कठिण शब्द ***

| | | | | | |
|---|---|---|---|---|---|
| विस्तृतः | – | विशाल | शिखराणि | – | शिखर |
| हरितानि | – | हिरवेगार | शोभन्ते | – | शोभून दिसतात |
| पर्यटकाः | – | पर्यटक | भूषणम् | – | अलंकार |

**प्रश्न :**

१. शेवडे महोदयैः प्रतिपादितम् विन्ध्यवर्णनं स्वशब्दैः लिखत।





# सुवाच्यलेखनम्

*कौटिलीय अर्थशास्त्र हा ग्रंथ इ.स. १९०९ मध्ये प्रकाशात आला. या ग्रंथाचा विषय राजनीतिशास्त्र होय. परंपरागत मतानुसार 'अर्थशास्त्र' हा ग्रंथ कौटिल्याने लिहिला आहे. प्रशासन, राज्यकारभार आणि राजकारण हे तीन विषय या ग्रंथात समाविष्ट आहेत.*

शासने शासनमित्याचक्षते ।१।

शासनप्रधाना हि राजानः तन्मूलत्वात्संधिविग्रहयोः ।२।

तस्मादमात्यसंपदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखनवाचनसमर्थो लेखकः स्यात् ।३।

सोऽव्यग्रमना राज्ञः संदेशं श्रुत्वा निश्चितार्थं लेखं विदध्यात्
देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य ।४।

**जातिं कुलं स्थानवयःश्रुतानि कर्मद्धिशीलान्यथ देशकालौ।**
**यौनानुबन्धं च समीक्ष्य कार्ये लेखं विदध्यात्पुरुषानुरूपम् ।५।**

अर्थक्रमः संबन्धः परिपूर्णता माधुर्यमौदार्यं स्पष्टत्वमिति लेखसंपत् ।६।

तत्र यथावदनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थक्रमः ।७।

प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमा समाप्तेरिति संबन्धः ।८।

अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाश्रान्तपदतेति परिपूर्णता ।९।

सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम् ।१०।

अग्राम्यशब्दाभिधानमौदार्यम् ।११।

प्रतीतशब्दप्रयोगः स्पष्टत्वमिति ।१२।

## * कठिण शब्द *

आयक्षते - म्हणतात। 
संपदोपेतः - सर्व गुणांनी संपन्न।
अव्यग्रमना - एकाग्र मन असणारा
पुरुषानुरूपम् - पुरुषांसारखा
विदध्यात् - तयार करावा

**प्रश्नाः-** कौटिलीय अर्थशास्त्रानुसृत्य 'सुवाच्यलेखनम्' इत्यस्य आशयं स्वशब्दैःलिखतं।





# शिक्षा - आयोगाः

स्वतन्त्रताप्राप्तेः परं भारतसर्वकारः भारतीयशिक्षां सुनियोजयितुं सुसङ्घटयितुं, सुविकासयितुं च दृढसंकल्पम् अकरोत्। तदनन्तरं भारतसर्वकारेण शिक्षाप्रणाल्याः सर्वेक्षणाय परामर्शप्रदानाय आयोगाः निर्मिताः। तेषु –

१. विश्वविद्यालय – आयोगः

२. माध्यमिकशिक्षा – आयोगः

३. प्राथमिकशिक्षा – आयोगः

इति एते महत्त्वपूर्णाः भवन्ति। तेषां मार्गदर्शनेन शिक्षामन्त्रालयः कार्यं कारयति। भारतीयशिक्षायाम् इमे आयोगाः महत्त्वपूर्णं स्थानं वहन्ति।



**विश्वविद्यालय–आयोगः**

उच्चशिक्षाप्रणाल्याः दोषान् दूरीकर्तुम् अन्तर्विश्वविद्यालय–शिक्षापरिषदः, केन्द्रीयशिक्षापरामर्शसमितेः च कथनानुसारं भारतसर्वकारः अखिलभारतीयस्तरे विश्वविद्यालयशिक्षा–आयोगस्य निर्माणं १९४८ तमे वर्षे नवम्बरमासस्य चतुर्थे (४) दिनाङ्के अकरोत्। अस्य आयोगस्य अध्यक्षः डॉ. सर्वेपल्ली राधाकृष्णन् महाभागाः आसन्। अतः अस्य आयोगस्य ''राधाकृष्णन् आयोगः'' इति अपि नाम अस्ति।

भारतीयविश्वविद्यालयीयशिक्षायाः, अनुसंधानस्य उद्देश्यम्, विश्वविद्यालय–संवहन–नियन्त्रण–कार्यक्षेत्रादीनां निर्णयः, उच्चशिक्षायाः परीक्षाक्रमस्य स्तरोन्नयनस्य च विचारः, शिक्षायाः अवधिः, पाठ्यक्रममाध्यमम्, विश्वविद्यालयानां स्थापनम्, अध्यापकयोग्यता–वेतन–कार्याधिकाराः, छात्राणामनुशासनं, छात्रावासादीनां संयोजनम् इत्यादिषु विंशतिविषयेषु तत्र चिन्तनं कृतम्।

**आयोगस्य प्रमुखविचाराः –**

विश्वविद्यालयीयशिक्षा व्यावसायिक–वाणिज्यक–राजनीतिक्षेत्रेषु विकासार्थं स्यात्। बौद्धिकविकासाय, प्रजातन्त्र–सफलीकरणाय, राष्ट्रियतायाः विकासाय च भवेत्। उच्चशिक्षायां पाठ्यपुस्तकापेक्षया पाठ्यविषयाऽधारिताः संदर्भग्रन्था एव भवेयुः। स्नातकोत्तरस्तरे कक्षोपस्थितेः प्राधान्यं न भवेत्। स्नातकपाठ्यक्रमः त्रिवर्षीयः भवेत्। पाठ्यक्रमः सामान्यस्नातकानां कृते द्विवर्षीयः, प्रतिष्ठा (Honours) स्नातकानां कृते एकवर्षीयः च स्यात्। शिक्षायाः माध्यमरूपेण आङ्गलभाषास्थाने प्रादेशिकभाषाः एव भवेयुः। स्नातकोत्तरस्तरे प्रशिक्षणाय अनुसंधानकार्याय च प्राधान्यं देयम्। अनुसन्धानच्छात्राः राष्ट्रियस्तरे चिताः भवेयुः।

**२. माध्यमिकशिक्षा– आयोगः**



स्वतन्त्रताप्राप्तेः अनन्तरं केन्द्रीयशिक्षापरामर्शकपरिषदः परामर्शेण भारतसर्वकारेण २३-९-५२ दिने मद्रासविश्वविद्यालयस्य उपकुलपतीनां डॉ. आकार्ट लक्षणस्वामि मुदलियारमहाशयानाम् आध्यक्ष्ये माध्यमिकशिक्षायोगस्य निर्माणं कृतम्। तत्र उल्लेखिताः विषयाः एवं भवन्ति।

**१. प्रचलितमाध्यमिकशिक्षायाः दोषाः** – परम्परागतपद्धत्यनुसारं पाठनपरीक्षा प्रणाल्यौ, सङ्कुचितपाठ्यक्रमः, व्यावहारिकज्ञानाभावः, अनुशासनहीनता, पुस्तकीयज्ञानम्, उच्चशिक्षाभिमुखैकपक्षीयत्वं च प्रचलितमाध्यमिकशिक्षायाः प्रमुखाः दोषाः भवन्ति।

**२. शिक्षायाः उद्दिष्टम्** – जनतन्त्रीयनागरिकतायाः विकासः, व्यावहारिककुशलतायाः उन्नतिः, व्यक्तित्वस्य विकासः, नेतृत्वविकासः, इति एतानि माध्यमिकशिक्षायाः प्रमुखानि उद्दिष्टानि स्युः।

**३. माध्यमिकशिक्षायाः नवीनस्वरूपम् –** प्राथमिकशिक्षायाः अनन्तरं ११-१७ वयस्केभ्यः बालकेभ्यश्च सप्तवर्षात्मकः ३+४ रुपेण विभक्तः कालः माध्यमिकोच्चतरमाध्यमिकशिक्षयोः स्यात्। माध्यमिकविद्यालयाः बहूद्देशीयाः बहवः ऐच्छिकपाठ्यक्रमयुक्ताश्च भवेयुः। ग्रामनगरविद्यालयाः माध्यमिकशिक्षया तत्तत्क्षेत्रानुकूलव्यावासायिकविकासशीलाः स्युः।

**४. पाठ्यक्रमः –** माध्यमिकस्तरे रुचिपूर्णः, विविधतया युक्तः, स्थानीयानाम् आवश्यकतानां पूरकः सामाजिकक्रियापूर्णः, जीवनेन सम्बद्धैः विचारैः युक्तः च पाठ्यक्रमः स्यात्।

**५. पाठ्यपुस्तकानि –** पाठ्यपुस्तकानाम् अपेक्षया सान्दर्भिकाः ग्रन्थाः अधिकाः स्युः। उच्चस्तरीय-पाठ्यपुस्तक-समितिः स्यात्। तत्र पाठ्यपुस्तकानि काले काले परिवर्तितानि स्युः।

**६. छात्राणां शारीरिकं कल्याणम् –** स्वस्थानां नागरिकाणां निर्माणाय छात्राणां शारीरिकं स्वास्थ्य-सेवासंस्थायाः क्रियान्वयीकरणं छात्राणां स्वास्थ्यस्य परीक्षा, रुग्णेभ्यः छात्रेभ्यः निशुल्कः उपचारः, आवासीयेषु उपचारः आवासीयेषु विद्यालयेषु छात्रावासेषु च पौष्टिकस्य भोजनस्य व्यवस्था इत्यादयः अनेकाः परामर्शाः प्रदत्ताः।

### ३) प्राथमिकशिक्षा-आयोगः



भारतसर्वकारेण विश्वविद्यालयशिक्षायोगस्य माध्यमिकशिक्षायोगस्य च निर्माणात् अनन्तरं १९६४ तमे वर्षे जुलैमासस्य १४ दिनाङ्के प्रो. डी. एस्. कोठारीमहोदयस्य नेतृत्वे प्राथमिक-शिक्षायोगस्य निर्माणं कृतम्। तत्र आयोगेन १९६६ वर्षे २९ दिनाङ्के दत्ते स्वप्रतिवेदने केचन परामर्शाः कृताः, ते एवं सन्ति। यथा –

**१. शिक्षायाः उद्दिष्टम्** – शिक्षा तादृशी स्यात् या मानवजीवनस्य आवश्यकतया आङ्‌काक्षया च सह सम्बद्धा सामाजिकम् आर्थिकं सांस्कृतिकं च परिवर्तनम् आनेतुं समर्था स्यात्। राष्ट्रियं लक्ष्यं साधयितुं च उपकारिणी स्यात्।

**२. संरचना** – राष्ट्रियस्तरे शिक्षायाः नवीना संरचना विविधैः विकल्पैः संपन्ना भवेत्। १०+२+३ इति संरचनायाः अनुसारं सामान्यशिक्षा १० वर्षाणि, उच्चमाध्यमिक-शिक्षा वर्षद्वयं, स्नातकस्तरीया उच्चशिक्षा वर्षत्रयं च स्यात् इति।

**३. अध्यापकस्थितिः** – आयोगः शिक्षणव्यवसायस्य समुन्नतये शिक्षकाणाम् आर्थिक-सामाजिक-व्यावसायिक-स्थितीनाम् स्तरं वर्धयित्वा प्रतिभावतां युवकानाम् आकर्षणं कार्यमिति परामर्शं प्रदाय, वेतनमानं च शिक्षकस्तरानुगुणं परिकल्प्य काले काले तत् वेतनमानं परिवर्तयितुं च आयोगेन सूचना दत्ता।

**४. अध्यापकानां प्रशिक्षणम्** – प्रचलितानां प्रशिक्षणसंस्थानां प्रमुखान् दोषान् निवारयितुम् आयोगेन उपायाः दत्ता।

**५. पाठ्यक्रमः** – आयोगेन प्राथमिक-माध्यमिक-शिक्षयोः पाठ्यक्रमः चतुर्धा विभज्य स्पष्टीकृतः यत् निम्नप्राथमिकः स्तरीयः प्राथमिकस्तरीयः, माध्यमिकस्तरीयः, उच्चमाध्यमिकस्तरीय इति। तत्र सर्वत्र भाषा, गणितं, विज्ञानं, पर्यावरणस्य अध्ययनम् इति विषयाः स्युः।

**६. पाठ्यक्रमे त्रिभाषासूत्रम्** – सामान्यशिक्षया सह सर्जनात्मक-क्रियाणां कार्यानुभवस्य, समाजसेवायाः च शिक्षाः भवेयुः इति आयोगेन उक्तम्। भाषासूत्रेऽपि स्वीयं नूतनं मतं प्रतिपादितम् यथा –

१. मातृभाषा प्रादेशिकभाषा च।

२. राजभाषा सहराजभाषा च (हिन्दी/अंग्रेजी)।

३. आधुनिकी भारतीया भाषा, युरोपीया भाषा इति।

**७. उच्चशिक्षा** – नवीनस्य विज्ञानस्य अन्वेषणाय, राष्ट्रियचेतनायाः नेतृत्वाय, प्रतिभायाः च विकासाय, देशीयकृषि-कला-विज्ञान-प्रौद्योगिकानां-विकासाय च उच्चशिक्षा भवेत् इति आयोगेन प्रतिपादितम्।





## सत्यकामजाबालकथा

वेदसाहित्याचा अंतिम भाग म्हणजे उपनिषद. वेदांचे सारभूत तत्त्व उपनिषदांतून प्रकट झाले आहे. उपनिषदांनाच 'वेदान्त' ही असे नाव आहे. उप+नि+सद् असा उपनिषद शब्द सिद्ध झाला आहे. त्याचा अर्थ गुरु जवळ बसून ज्ञान प्राप्त करणे. शिष्य गुरुजवळ बसून जे तत्त्वज्ञान शिकतो ते म्हणजे उपनिषद होय. भारतीय दर्शनामध्ये प्रामुख्याने दहा उपनिषदे आहेत.

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तरियः ।
छान्दोग्य–ऐतरेयं च बृहदारण्यकं तथा ।।

यापैकी छान्दोग्य उपनिषद हे सामवेदाच्या कौथुम शाखेशी संबंधित आहे. **सर्वं खलु इदं ब्रह्म!** हे या उपनिषदाचे प्रसिद्ध वचन आहे. सत्यकाम जाबालाची कथा याच उपनिषदातील चौथ्या अध्ययातून उद्धृत केली आहे.

---

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ।।१।।

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ।।२।।

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ।।३।।

तं होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति ।।४।।

तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रं संपेदुः ।।५।।

# शकुन्तलायाः प्रत्याख्यानम्

महाकवी कालिदास संस्कृतसाहित्यामध्ये अद्वितीय आहे. कालिदासाच्या सात साहित्यकृती जगप्रसिद्ध आहेत. मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम् ही तीन नाटके, कुमारसंभवम् व रघुवंशम् ही दोन महाकाव्ये, तसेच ऋतुसंहार आणि मेघदूतम् ही दोन खंडकाव्ये यांचा समावेश सप्त साहित्यकृतींमध्ये आहे. अलौकिक प्रतिभा, सूक्ष्म सौंदर्यदृष्टी, प्रत्ययकारी निसर्गवर्णने, उपमादी अलंकारांचा औचित्यपूर्ण सन्निवेश इत्यादी त्याच्या साहित्याकृतीची गुणवैशिष्ट्ये आहेत.

कालिदासाच्या तीन नाटकांपैकी अभिज्ञानशाकुन्तलम् हे शृंगाररसपूर्ण नाटक जगप्रसिद्ध आहे. त्यामध्ये नायिका शकुन्तला आणि नायक दुष्यन्ताची कथा वर्णित आहे. अभिज्ञानशाकुन्तलम् नाटक वाचल्यानंतर जर्मन कवि गेटे हा ते नाटक डोक्यावर घेऊन नाचला होत. प्रस्तुत "शकुन्तलायाः प्रत्याख्यानम्" हे गद्यांश आभिज्ञानशाकुन्तल नाटकातील पाचव्या अंकातून उद्धृत केला आहे.

---

**राजा –** किं च अत्रभवती मया परिणीतपूर्वा ?

**शकुन्तला –** (सविषादम् आत्मगतम्) हृदय ! साम्प्रतं ते आशङ्का।

**शार्ङ्गरवः –** किं कृतकार्यद्वेषाद् किं धर्मं प्रति विमुखता ? किं कृतावज्ञा ?

**राजा –** कुतः अयम् असत्कल्पनाप्रश्नः।

**शार्ङ्गरवः –** ऐश्वर्यमत्तेषु प्रायेण अमी विकाराः मूर्च्छन्ति।

**राजा –** विशेषेणाधिक्षिप्तोऽस्मि।

**गौतमी –** जाते! मुहूर्तं मा लज्जस्व। अपनेष्यामि तावत् ते अवगुण्ठनम्। ततः त्वां भर्ताऽभिज्ञास्यति। (इति यथोक्तं करोति।),

**राजा** – (शकुन्तलां निर्वर्ण्य विचारयन् स्थितः।)

**शार्ङ्गरवः** – भो राजन्! किमिति जोषमास्यते?

**राजा** – भोः तपोधनाः! चिन्तयन्नपि न खलु स्वीकरणम् अत्रभवत्याः स्मरामि। तत् कथम् इमाम् अभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणम् आशङ्कमानः प्रतिपत्स्ये।

**शकुन्तला** – (अपवार्य) आर्यस्य परिणय एव संदेहः। कुत इदानीं मे दूराधिरोहिणी आशा?

**शारद्वतः** – शकुन्तले! वक्तव्यम् उक्तम् अस्माभिः। सः अयम् अत्रभवान् एवम् आह। दीयताम् अस्मै प्रत्ययप्रतिवचनम्।

**शकुन्तला** – (अपवार्य) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन। आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्। (प्रकाशम्) आर्यपुत्र! (इत्यर्धोक्ते) संशयित इदानीं परिणये नैष समुदाचारः। पौरव! न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम्।

**राजा** – (कर्णौ पिधाय) शान्तं पापम्। किं कूलंकषः सिन्धुः प्रसन्नम् अम्भः तटतरुं च इव व्यपदेशं आविलयितुम् इमं जनं च पातयितुम् ईहसे?

**शकुन्तला** – भवतु यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्त तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि।

**राजा** – उदारकल्पः।

**शकुन्तला** – (मुद्रास्थानं परामृश्य) हा धिक्, अङ्गुलीयकशून्या मेऽङ्गुलि। (इति सविषादं गौतमीमवेक्षते।)

**गौतमी** – नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम्।

**राजा** – (सस्मितम्) इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते।

**शकुन्तला** – अत्र तावत् विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि।

**राजा** – श्रोतव्यमिदानीं संवृत्तम्।

**शकुन्तला** – ननु एकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत्।

**राजा** – श्रुणुमस्तावत्।

**शकुन्तला** – तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत् प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात् तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः तदा त्वमित्थं प्रहसितोऽसि सर्वः सगन्धेषु विश्वसिति। द्वौ अपि अत्र आरण्यकौ इति।

**राजा** – एवम् आदिभिः आत्मकार्य-निर्वर्तिनीनाम् अनृतमयवाङ्मधुभिः आकृष्यन्ते विषयिणः।

**शकुन्तला** – (सरोषम्) अनार्य! आत्मनो हृदयानुमानेन पश्यसि। क इदानीम् अन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।

**राजा** – (आत्मगतम्) सन्दिग्धबुद्धिं मां कुर्वन् न कैतव इव अस्याः कोपो लक्ष्यते।

**शकुन्तला** – सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोहृदयस्थितविषस्य हस्ताभ्याशमुपगता।

(इति पटान्तेन मुखमावृत्य रोदिति।)



# डॉ. सर्वेपल्लि राधाकृष्णन्
## (१८८८ - १९७५)



तमिलनाडुमध्ये तिरुत्तणि इति प्रसिद्धस्थानम् अस्ति। तत्र वीरस्वामी इति कश्चन लघूद्योगस्थः जीवति स्म। तस्य पत्नी सीतम्मा आसीत्। तयोः दम्पत्योः द्वितीयः पुत्रः आसीत् राधाकृष्णः। १८८८ सेप्तम्बर-मासस्य पञ्चमदिनाङ्के सः जन्म प्राप्तवान्। चतुर्षु सहोदरेषु अयं राधाकृष्णः प्रतिभया अग्रगण्यः आसीत्।

तिरुत्तणिमध्ये एकः विद्यालयः आसीत्। तस्मिन् विद्यालये वयसः चतुर्थे वर्षे राधाकृष्णस्य विद्याभ्यासस्य प्रारम्भः अभवत्। तदा सः आङ्गलभाषा, तेलुगु भाषा, गणितशास्त्रं, भूमिशास्त्रं, भारतचरितम् इत्यादिविषयान् तत्र अपठत्।

प्रथमविश्वमहायुद्धकालपर्यन्तं तिरुपतिमध्ये क्रैस्तवधर्मप्रचारकः एकं विद्यालयं सञ्चालयति स्म। तस्मिन् विद्यालये १८९३ तमे वर्षे राधाकृष्णः प्रविष्टः। क्रैस्तवधर्मगुरुभिः चालितः आसीत् अयं विद्यालयः इति कारणेन तत्र 'बायबल' ग्रन्थस्य पठनस्य बहु प्राधान्यम् आसीत्। तेन कारणेन सः क्रैस्तवधर्मे हैन्दवधर्मेषु च प्रावीण्यं प्राप्तवान्। पठनस्य आरम्भकाले तस्य तत्र अधिकरुचिः नासीत्। विद्यालये सामान्यविद्यार्थिरूपेण सः पठनम् आरभत। परन्तु अनन्तरकाले सः पठने विशेषश्रद्धां प्रदर्शितवान्।

राधाकृष्णस्य मनसि तत्त्वशास्त्रपठने महती रुचिः आसीत्। तस्मात् सः अधिकपठनार्थम् ऐच्छिकविषयरूपेण तत्त्वशास्त्रं चितवान्। मद्रासनगरे "मद्रास-ख्रिश्चियन्-कॉलेज्" इति महाविद्यालये तत्त्वशास्त्रे एम्. ए. परीक्षार्थं प्रविष्टः। एवं च सर्वेषां प्राध्यापकानां प्रियशिष्यत्वेन गतिवा एम्. ए. परीक्षायाम् उत्तीर्णतां प्राप्तवान्।

राधाकृष्णस्य सनातनधर्मे बहुविश्वासः आसीत्। तथा च स्वामिविवेकानन्दस्य साहित्ये तस्य विशेषरुचिः आसीत्। तथैव प्लेटो, प्लोटिनस्, हेगल, कान्ट्, ब्रॅडले, बरग्सन् इत्यादिपाश्चात्त्यतत्त्वचिन्तकानां साहित्ये सः पाण्डित्यं सम्पादितवान्।

डॉ. राधाकृष्णः वेद-उपनिषत्-पुराण-इतिहास-स्मृत्यादिषु ग्रन्थेषु अपि असाधारणं पाण्डित्यम् अर्जितवान्। भारतीयधर्मग्रन्थानाम् अध्ययनार्थं संस्कृतभाषायाः आवश्यकतां राधाकृष्णः ज्ञातवान्। तस्मात् संस्कृतपण्डितानां समीपं गत्वा वेद-उपनिषद्-पुराण-इतिहासादिकं पठितवान्। हिन्दुधर्मस्य प्रचारार्थं सः प्रयतितवान्। तदर्थं सः उपनिषत्सु भगवद्गीतायां च अगाधं पाण्डित्यम् अर्जितवान्।

शास्त्रप्रवीणः राधाकृष्णः १९१८ तमे वर्षे मैसूरविश्वविद्यालये तत्त्वशास्त्रविभागे सह-प्राध्यापकरूपेण उद्योगं प्राप्तवान्। सः छात्रप्रियः प्राध्यापकः आसीत्। तेन भारतीयदर्शनम् इति विशालग्रन्थस्य रचना कृता। तादृशं सम्पूर्णतत्त्वसाहित्यादिविषयस्य चित्रणं भारतीयेन न केनापि कृतमासीत्।

डॉ. राधाकृष्णः आन्ध्रविश्वविद्यालयस्य, काशी - हिन्दु - विश्वविद्यालयस्य च कुलपतिः आसीत्। तदनन्तरं १९५२ वर्षे स्वतन्त्र भारतस्य उपराष्ट्रपतिः, १९६२ तमे वर्षे राष्ट्रपति पदम् अलंकृतम् आसीत्।

यथा कालं सः बहुविधान् उपाधीन् प्राप्तवान्। डॉ. राधाकृष्णः न केवलं शिक्षकः अपि तु राष्ट्रसमुद्धारकः आसीत्। राष्ट्रिय-सेवा-योजनायाः निर्माणम् तस्यैव संकल्पना इति।

डॉ. राधाकृष्णः यदा भारतस्य राष्ट्रपतिः आसीत्, तस्मिन् वर्षे भारतस्य श्रेष्ठः "भारतरत्नम्" इति उपाधिः तस्मै प्रदत्तः। स्वपरिश्रमेण ज्ञानी भूत्वा डॉ.

राधाकृष्णः विश्वस्य आदरपात्रम् आदर्शशिक्षकः तत्त्वचिन्तकश्च अभवत्।



# संस्कृत-महाकवयः

विश्वस्य प्राचीनतम-भाषारूपेण विद्यमाना भाषा संस्कृतभाषा। काव्य-नाटकादिभिः एतां भाषां समृद्धां कुर्वन्तः महाकवयः निश्चयेन गौरवास्पदं स्थानं लभन्ते। एतां साहित्यपरम्परां भूषयत्सु महाकविषु महाकविः 'वाल्मीकिः' अग्रगण्यः। तेन रचितं 'रामायणम्' इति आदिकाव्यरूपेण जगति प्रसिद्धम्। तदनन्तरं व्यासविरचितं 'महाभारतम्' इत्यापि आर्ष-महाकाव्यरुपेण जगति प्रसिद्धम्। एते द्वे अपि महाकाव्ये अग्रे अभिजातकवीनां कृते मार्गदर्शके संजाते।

**भासः** – अभिजातसाहित्ये महाकविः भासः अन्यतमं स्थानं भूषयन् वर्तते। तस्य कालविषये यद्यपि मतभेदः दृश्यते, तथापि ख्रिस्ताब्दस्य द्वितीयशतक-चतुर्थशतकयोः मध्ये एव अस्य कालः स्वीकृतः। दक्षिणभारते मनलिक्करस्थिते मठे भासस्य त्रयोदश (१३) नाटकानि उपलब्धानि। एतासु कृतिषु तस्य नामोल्लेखः नास्ति। तथापि तस्य नाटकानां संग्रहः 'भासनाटकचक्रम्' इति नाम्ना प्रसिद्धः। रामायणं, महाभारतम्, उदयनकथाः, शूद्रकचरितम् इति तस्य नाटकानाम् आधारग्रन्थाः। 'स्वप्नवासवदत्तम्' इति नाटकं तु अद्य अपि सहृदयान्, वाचकान् आनन्दयति। तस्य नाटकचक्रमेव तदग्रकवीनां कृते प्रेरणादायकम् अभवत्।

**कालिदासः** – भासात् अनन्तरं महाकवेः कालिदासस्य स्थानम् उच्चतमं वर्तते। स्वप्रतिभया एषः 'कविकुलगुरुः' इति पदवीं प्राप्तवान्। तस्य सप्तकृतिषु महाकाव्यं, खण्डकाव्यम्, नाटकम् एतेषां त्रयाणाम् अपि समावेशः अस्ति। उपमा-अलङ्कारे प्रावीण्येन 'उपमा कालिदासस्य' इति उक्तिः प्रसिद्धा। कालिदासः दीपशिखा-कालिदासः इति प्रसिद्धः। पञ्चमहाकाव्येषु रघुवंशम् नवदशसर्गै बद्धम्। कुमारसम्भवं च सप्तदशसर्गेषु विद्यते।

**भारविः** – कालिदासात् अनन्तरं महाकविः भारविः महाकाव्य-रीतिम् अनुसरन् दृश्यते। तस्य एका एव रचना 'किरातार्जुनीयम्' इति महाकाव्यम् अस्ति। अस्मिन् अष्टादशसर्गेषु किरातरूपस्य शिवस्य अर्जुनस्य च कथा वर्णिता। महाभारते वनपर्वणि अयं कथाभागः दृश्यते। 'अर्थगौरवम्' इति भारवेः वैशिष्ट्यम् अस्ति। तस्य 'सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम्' इति सूक्तिः चिरं मार्गं दर्शयति।

**माघः** – भारवेरनन्तरं महाकविः माघः अपि असाधारणः। वैदुष्यपूर्णं 'शिशुपालवधम्' इति तस्य एकमेव महाकाव्यम्। अतः तत् 'माघकाव्यम्' इति नाम्ना अपि प्रसिद्धम्। उपमा, अर्थगौरवं, पदलालित्यम् एते त्रयः अपि गुणाः माघस्य काव्ये सन्ति। राजनीतिः अस्य काव्यस्य मुख्यः विषयः। अस्मिन् विंशतिसर्गाः सन्ति। माघः **घण्टा-माघः** इति प्रसिद्धः।

**श्रीहर्षः** – श्रीहर्ष इति महाकविषु अन्यतमः। सः 'नैषधीयचरितम्' इति महाकाव्यं द्वाविंशति-सर्गेषु रचितवान्। तस्य मूलस्त्रोतः महाभारतस्य 'नलोपाख्यानम्' अस्ति। तस्मिन् नलदमयन्त्योः प्रेम्णः विवाहस्य च कथा वर्णिता वर्तते। पञ्चमहाकाव्येषु किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितम् च एतानि बृहत्त्रयी इति ख्यातानि।

**भवभूतिः** – महाकविः भवभूतिः अपि महाकविषु अग्रगण्यः वर्तते। तस्य मालतीमाधवम्, महावीरचरितम्, उत्तररामचरितम् इत्येताः तिस्त्रः रचनाः सन्ति। उत्तररामचरिते भवभूतिः विशिष्यते इति तस्य विषये ख्यातम् अस्ति यत्र रामायणकथाया उत्तरभागः वर्णितः।

**बाणभट्टः** – गद्यप्रकारस्य सार्वभौमः महाकविः बाणभट्टः संस्कृतसाहित्ये सर्वमान्यः। कादम्बरी, हर्षचरितं च एते द्वे बाणभट्टस्य गद्यकाव्ये। जीवनस्य प्रत्येकम् अंशः बाणेन स्पृष्टः। अतः 'बाणोच्छिष्टं जगत्सर्वम्' इति उक्तिः प्रसिद्धा।

तथैव 'गद्यं कवींना निकषं वदन्ति' इत्यपि प्रसिद्धम्।





# विदुरनीतिः

महाभारतातील उद्योग पर्वामध्ये विदुरनीतिचा समावेश आहे. महात्मा विदुराने चिंतित आणि विचलीत अशा धृतराष्ट्राला स्वकर्तव्याचा अतिशय मार्मिक आणि आशयपूर्ण उपदेश केला आहे. विदुराने राजव्यवहार तसेच लोकव्यवहार, नीती, धर्म, त्याग, न्याय, सत्य, राजधर्म इ. विषयांवरील विचार निर्भिडपणे व्यक्त केले आहेत. विदुराने धृतराष्ट्रास केलेला हा उपदेश 'विदुरनीति' नावाने प्रसिद्ध आहे.

---

१. **जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि।**
**तद् ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि।।**

**अन्वयः –** तात जाग्रतः दह्यमानस्य यत् श्रेयः अनुपश्यसि तद् नः ब्रूहि त्वम् धर्मार्थकुशलः हि असि।

**भाषान्तर –** हे तात (विदुर)! चिन्तेने जळल्यामुळे (उद्विग्न झाल्यामुळे) निद्राभंग झालेल्या मला कल्याणकारी असे मार्गदर्शन करा, कारण तुम्ही धर्मार्थामध्ये निपुण आहात.

२. **अभियुक्तं बलवता दुर्बलं हीनसाधनम्।**
**हृतस्वं कामिनं चौरमाविशन्ति प्रजागराः।।**

**अन्वयः –** दुर्बलम् हीनसाधनम् बलवता अभियुक्तम् हृतस्वं कामिनम् चोरम् अविशन्ति प्रजागराः।

**भाषान्तर –** ज्या मनुष्याला अशक्त आणि साधनविरहित असताना देखील शक्तिशाली मनुष्याशी विरोध पत्करावा लागतो तसेच ज्याचे सर्वकाही हरण केले आहे आणि चोर या तिघांना निद्रानाशाचा रोग लागतो.

३. **कच्चिदेतैर्महादोषैर्न स्पृष्टोसि नराधिप।**
**कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे।।**

**अन्वयः** – हे नराधिप! कच्चित् एतैः महादोषैः न स्पृष्टः असि कच्चित् च परवित्तेषु गृध्यन् न परितप्यसे।

**भाषान्तर** – हे महाराज (धृतराष्ट्र)! आपण कोणत्या महादोषाच्या संपर्कात तर नाही आलात किंवा कुण्या दुसऱ्याच्या धनाविषयी तुमच्या मनात लोभ तर उत्पन्न नाही झाला ना? ज्यामुळे आपण दुःखी आहात कारण मनुष्य लोभ आणि मोहामुळे स्वतःचा विवेक गमावून बसतो व तेच दुःखाचे मूळ कारण असते.

४. **दुर्योधने सौबले च कर्णे दुःशासने तथा।**
**एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि।।**

**अन्वयः** – दुर्योधने सौबले कर्णे तथा दुःशासने च एतेषु ऐश्वर्यमाधाय त्वम् कथम् भूतिमिच्छसि।

**भाषान्तर** – आपण दुर्योधन, शकुनी, कर्ण आणि दुःशासन यांच्यावर राज्याचा कारभार सोपवून राज्याच्या उन्नतीची अपेक्षा कशी करू शकता?

५. **आर्जवेन नरं युक्तमार्जवाद् सव्यपत्रपम्।**
**अशक्तं मन्यमानास्ते धर्षयन्ति कुबुद्धयः।।**

**अन्वयः** – कुबुद्धयः आर्जवेन युक्तम् नरम् आर्जवात् सव्यपत्रपम् अशक्तं मन्यमानाः तु धषर्यन्ति।।

**भाषान्तर** – दुष्ट बुद्धी असलेले लोक सज्जनाला त्याच्या सरळ स्वभावामुळे दुर्बल समजून त्याची निंदा करतात।

### * कठिण शब्द *

| | | | | | |
|---|---|---|---|---|---|
| जाग्रतो | - | जागणे | दह्यमानस्य | - | जळत असताना |
| अभियुक्त | - | विरोध | परितप्यसे | - | दुःखी होणे |
| सौबल | - | शकुनी | | | |





# श्रीमद्भगवद्गीता



महर्षी व्यासविरचित महाभारत या आर्षमहाकाव्यातील भीष्मपर्वामध्ये भगवद्गीता ग्रथित आहे. श्रीमद्भगवद्गीता १८ अध्याय आणि ७०० श्लोकांमध्ये निबद्ध आहे. कौरव आणि पांडवांच्या युद्धाला प्रारंभ होण्यापूर्वी भगवान श्रीकृष्णाने अर्जुनाला भगवद्गीतेच्या रूपाने स्वधर्माच रंगरुप तत्वज्ञानाचा उपदेश केला. युद्धभूमीवर स्वतःचे गुरु, बंधू, नातेवाईक इत्यादींना पाहून विषाद आणि अवसाद पावलेल्या अर्जुनाने युद्ध करण्यास नकार दिला. त्यावेळी भगवान श्रीकृष्णाने 'कर्मणि एव अधिकारः ते' असा उपदेश करून क्षत्रीयधर्म जागृत करून स्वकर्म करण्यास प्रवृत्त केले.

१. **सीदन्ति मम गात्राणि मुखं च परिशुष्यति।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते।।**

**अन्वयः** – मम गात्राणि सीदन्ति मुखं च परिशुष्यति मे शरीरे वेपथुः रोमहर्षः च जायते।

**भाषान्तर** – युध्दाची इच्छा करणाऱ्या रणभूमींत प्राप्त झालेल्या या बंधुवर्गास पाहून माझी गात्रें, अवयव गळून गेली आहेत व तोंड सर्व बाजूंनी कोरडें पडते माझ्या शरीरांत कंप आणि अंगावर रोमांच उभे राहतात आणि खूप वेदना होतात.

२. **गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।।**

**अन्वयः** – हस्तात् गाण्डीवं स्रंसते त्वक् परिदह्यते च अहं अवस्थातुं न शक्नोमि मे मनः भ्रमति इव।।

भाषान्तर : माझ्या हातातून माझे गाण्डीव धनुष्य गळून पडत आहे. आणि माझ्या शरीराचा दाह होत आहे. मी स्थिर उभा राहाण्यास समर्थ नाही. माझे मन भ्रमण करीत आहे. (अस्थिर/चंचल होत आहे.)

**३. न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।**
**किं नो राज्येन गोविंदं किं भोगैर्जीवितेन वा।।**

**अन्वयः** – कृष्ण, अहं विजयं राज्यं सुखानि च न कांक्षे, गोविंद! नः राज्येन किम्, भोगैः किम्, जीवितेन वा किम्।

**भाषान्तर** – हे कृष्णा मला विजयाची इच्छा नाही, मला राज्याची इच्छा नाही किंवा मला कोणत्याही सुखाचीही इच्छा नाही. हे गोविंद! राज्य घेऊन आम्हाला काय करायचे आहे? राज्य उपभोगून आम्हाला काय प्राप्त होणार? किंवा जिवंत राहून आम्ही काय करणार आहोत?

**४. कार्पण्यदोषोपहतस्वभावः पृछामि त्वां धर्मसंमूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेहं शाधि मां त्वां प्रपन्नम्।।**

**अन्वयः** – कार्पण्यदोष उपहतस्वभावः धर्मसंमूढचेताः अहं त्वां पृच्छामि यत् निश्चितं श्रेयः स्यात् तत् मे ब्रूहि अहं ते शिष्यः त्वां प्रपन्नं मां शाधि।

**भाषान्तर** – अर्जुन कृष्णाला म्हणतो की, व्यक्तींची कृपणता, दैन्य व आत्म्याचे स्वरूप न जाणणे या दोषांमुळे ज्याचा स्वभाव तिरस्कृत झाला आहे व त्यामुळे स्वधर्माविषयी ज्याचे चित्त विवेकशून्य झाले आहे असा मी तुला विचारतो की जे निश्चित श्रेय असेल, ज्याच्या पासून परम पुरुषार्थरूप अव्यभिचारी फल प्राप्त होईल ते मला सांग मी तुझा शिष्य आहे. मी तुला शरण

आलो आहे मला उपदेश कर.

**५. अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिता:।।**

**अन्वय: –** त्वं अशोच्यान् अन्वशोच: प्रज्ञावादान् च भाषसे पण्डिता: गतासून् च अगतासून् न अनुशोचन्ति।

**भाषान्तर –** श्रीकृष्ण अर्जुनाला म्हणतो की ज्या गोष्टीचा शोक करू नये त्या गोष्टीचा तू शोक करीत आहेस व बुद्धिमान पंडितासारखे सांगत आहेस. आत्मज्ञानी असे पण्डितजन हे मेलेल्यांविषयी व जिवंत असलेल्यांविषयी शोक करीत नाही.

**६. देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।।**

**अन्वय: –** यथा अस्मिन् देहे देहिन: कौमारं यौवनं जरा तथा देहान्तरप्राप्ति: तत्र धीर: न मुह्यति।

**भाषान्तर –** ज्याप्रमाण या देहात (शरीरात) देहवान् आत्म्याला बाल्यावस्था, तारूण्यावस्था आणि जीर्णावस्था (म्हातारपण) अशा तीन अवस्था प्राप्त होतात. तशीच दुसऱ्या देहाची प्राप्ती होते. त्याविषयी विद्वान तत्ववेत्ता पंडित मोहित होत नाही.

**७. वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।**

**अन्वय: –** यथा नर: जीर्णानि वासांसि विहाय अपराणि नवानि गृह्णाति तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि संयाति।

**भाषान्तर –** ज्याप्रमाणे मनुष्य जुनी वस्त्रे टाकून दुसरी नवी वस्त्रे धारण करतो त्याप्रमाणे देहवान् आत्मा जीर्ण निर्बल झालेली शरीरे सोडून दुसऱ्या नवीन शरीरामध्ये प्रवेश करतो.

**८. नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**

**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।।**

**अन्वयः** – एनं शस्त्राणि न छिन्दन्ति एनं पावकः न दहति एनं आपः न क्लेदयन्ति मारुतः च न शोषयति।

**भाषान्तर** – या आत्माला कधिही शस्त्र तोडू शकत नाही. त्याला अग्नि जाळू शकत नाही, पाणी कुजवू शकत नाही व त्याला वायू सरकवू शकत नाही तो आत्मा अमर आहे.

**९. जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।**

**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि।।**

**अन्वयः** – हि जातस्य मृत्युः ध्रुवः मृतस्य च जन्म ध्रुवं भवति, तस्मात् अपरिहार्ये अर्थे त्वं शोचितुं न अर्हसि।।

**भाषान्तर** – जो जन्माला आला त्याचा मृत्यू निश्चित आहे आणि मृत्यू झालेल्या आत्म्याचा जन्म निश्चित आहे. यास्तव या अपरिहार्य (टाळतां न येणाऱ्या गोष्टीविषयी) तू शोक (दुःख) करणे योग्य नाही।

**१०. हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**

**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।।**

**अन्वयः** – हतः वा स्वर्गं प्राप्स्यसि जित्वा वा महीं भोक्ष्यसे तस्मात् हे कौन्तेय! कृतनिश्चयः युद्धाय उत्तिष्ठ।

**भाषान्तर** – युद्धात शत्रूंकडून मारला गेलास तर तुला स्वर्ग प्राप्त होईल किंवा शत्रुंना जर तू जिंकलेस तर पृथ्वीचा उपभोग घेशील यास्तव हे कुंतीपुत्रा मी शत्रूंना मारीन किंवा मरेन असा निश्चय करून यद्ध करण्यासाठी उठ.

११. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।

**अन्वयः** – ते अधिकारः कर्मणि एव फलेषु मा कदाचन (अधिकारः) कर्मफल हेतुः मा भूः, ते सङ्गः अकर्मणि (मा) अस्तु।

**भाषान्तर** – तुझा अधिकार कर्म करणे आहे. कर्म करीत असताना फलाविषयी केव्हाही तुझा अधिकार नाही ह्याचप्रमाणे तू कर्मफलाची इच्छा करून त्या फलाचे निमित्त होऊनकोस. तुझी प्रीति कर्म न करणें या गोष्टीत होऊ नये।

१२. नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव।।

**अन्वयः** – अच्युत त्वत्प्रसादात् मोहः नष्टः मया स्मृतिः लब्धा, गतसंदेहः स्थितः अस्मि, तव वचनं करिष्ये।

**भाषान्तर** – हे कृष्णा! माझा अज्ञानजन्य मोह सम्पूर्णपणे नाहीसा झाला आहे. तुझ्या कृपेमुळे मी आत्मतत्त्वाविषयीच्या स्वरूपांची ज्ञान प्राप्तकेले. आता माझ्या सर्व शंका नष्ट झाल्या आहेत. तुझ्या म्हणण्याप्रमाणे मी वागेन.

### * कठिण शब्द *

| | | | |
|---|---|---|---|
| सीदन्ति – गळून जाणे | | परिशुष्यति – सर्व बाजूंनी कोरडे पडते | |
| स्रंसते – गळते | | कार्पण्यम् – कृपणता | |
| ब्रूहि – सांग | | न मुह्यति – मोहित होत नाही | |
| वासांसि – वस्त्रे | | विहाय – टाकून | |
| ध्रुवः – निश्चित | | जातस्य – उत्पन्न झालेल्या | |
| शोचितुम् – शोक करण्यास | | न अर्हसि – योग्य नाही | |
| प्राप्स्यसि – प्राप्त होशील | | मा अस्तु – न होवो | |
| लब्धा – मिळविली | | त्वत्प्रसादात् – तुझ्या कृपेमुळे | |





# रघुवंशम्

रघुवंशम् हे संस्कृत साहित्यातील सुप्रसिद्ध पंचमहाकाव्यांपैकी एक आहे. एकोणवीस सर्गांनी युक्त असलेल्या या महाकाव्यात कालिदासाने राजा दिलीप ते अग्निवर्ण अशा २८ राजांचे वर्णन केले आहे. प्रस्तुत श्लोक या महाकाव्याच्या पहिल्या सर्गातून उद्धृत केले आहेत.

(रघुपासूनच या काव्याला आरंभ झाला असल्याने ह्याला रघुवंश असे म्हणतात.) दिलीप हा रघुचा पिता! दिलीप राजाची गुणवैशिष्ट्ये खालील श्लोकातून विशद केली आहेत.

---

१. **वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
   **जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

**अन्वय:** – (अहं) वागर्थौ इव संपृक्तौ जगत: पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्दे।

**भाषान्तर** – शब्द व त्याचा अर्थ ह्यांचे सम्यक् ज्ञान प्राप्त व्हावे म्हणून शब्द व अर्थ ह्यांच्याप्रमाणे एकमेकांशी सदैव सम्मीलित (निगडीत) असलेल्या व अखिल जगताचे माता-पिता असणा-या पार्वती व परमेश्वराला (मी) वंदन करतो.

२. **क्व सूर्यप्रभवो वंश: क्व चाल्पविषया मति:।**
   **तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।**

**अन्वय:** – सूर्यप्रभव: वंश: क्व, अल्पविषया मति: च क्व, दुस्तरं सागरं मोहात् उडुपेन तितीर्षु: अस्मि।

**भाषान्तर** –सूर्यापासून उत्पन्न झालेला रघुचा वंश कोठे? आणि लहानसहान विषयात चालणारी माझी अल्पमती कोठे? (मी माझ्या) अज्ञानातून दुर्लंघ्य असा सागर छोटया नावेने तरून जाण्याची इच्छा करीत आहे.

३. मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः।।

**अन्वयः** – मन्दः कवियशःप्रार्थी प्रांशुलभ्ये फले लोभात् उद्बाहुः वामन इव उपहास्यतां गमिष्यामि।

**भाषान्तर** – मी मंदबुद्धी असल्यामुळे, मोठमोठ्या कवींना प्राप्त होणारे यश मिळविण्याची इच्छा धरली तर ते उंच मनुष्याच्या हाती येणा–या फळाकरिता एखाद्या वामनमूर्तीने हात वर करण्यासारखे हास्यास्पद होईल.

४. **अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः।।**

**अन्वयः** – अथवा पूर्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्य इव मे गतिः अस्ति।

**भाषान्तर** – तथापि प्राचीन कवींनी आपल्या वाग्विभवाने ह्यात प्रवेश करून ठेवलेला असल्यामुळे वेजे पाडलेल्या मण्यात सूत्राला ज्याप्रमाणे सहज प्रवेश करता येतो, त्याप्रमाणे मलाही येथे मार्ग काढता येईल.

५. **सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्।।**

६. **यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।**
**यथाऽपराधदण्डानां यथाकालप्रबोधिनाम्।।**

७. **त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।**
**यषसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।**

८. **शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।**
**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।**

९. **रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।**

**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः।।**

